॥ श्रीः ॥

महामहोपाध्यायमाधवाचार्य्यविरचितः ।

# कालमाधवः ।

श्रीचन्द्रकान्ततर्कालङ्कारकृत-

संक्षिप्तटिप्पणसमेतः ।

---

सोऽयम्

श्रीकृष्णदासात्मज–गङ्गाविष्णोः

अध्यक्ष "लक्ष्मीवेङ्कटेश्वर" मुद्रणालये

मैनेजर पं० शिवदुलारे वाजपेयीत्यनेन स्वाम्यर्थं

मुद्रयित्वा प्रकाशितः ।

---

शकाब्दाः १८३८, संवत् १९७३.

---

कल्याण–मुंबई.

---

# भूमिका.

—**—

कालमाधवनाम्ना प्रसिद्धोऽयं कालनिर्णयाभिधो ग्रन्थः । क्वचित् कालमाधवीयतयाप्यस्य निर्देशो दृश्यते । सोऽयं ग्रन्थः पराशर-स्मृतिव्याख्यापरिशिष्टरूपः पराशरस्मृतिव्याख्याप्रणयनानन्तरं प्रणीतः । तथा चास्य ग्रन्थस्योपक्रमणिकागतः श्लोकः—

"व्याख्याय माधवाचार्यो धर्मान्पाराशरानथ ।
तदनुष्ठानकालस्य निर्णयं वक्तुमुद्यतः ॥"

अस्मिन् ग्रन्थे पञ्च प्रकरणानि सन्ति । प्रथममुपोद्घातप्रकरणम् । द्वितीयं वत्सरप्रकरणम् । तृतीयं प्रतिपत्प्रकरणम् । चतुर्थं द्वितीयादिप्रकरणं वावशिष्टतिथिप्रकरणम् । पञ्चमं प्रकीर्णकप्रकरणं वा नक्षत्रादिप्रकरणम् ।

प्रथम उपोद्घातप्रकरणे दर्शनशास्त्ररीत्या विचारेण कालसत्त्वं, निर्णययोग्यता, नित्यानित्यभेदेन कालद्वैविध्यं, नित्यकालस्त्वीश्वर एव स च कर्मादौ स्मर्तव्यः, जन्यकालमध्ये त्वब्दस्य मुख्यत्वं निमेषादीनां तु तदाश्रिततया गौणत्वमित्येतदर्थजातमभिहितम् ।

द्वितीये वत्सरप्रकरणे वत्सरायनऋतुमासपक्षा निरूपिताः । तत्र चान्द्रसौरसावननाक्षत्रबार्हस्पत्यभेदात् पञ्चविधो वत्सरः, विषयविशेषे तेषामुपयोगश्च निर्णीतः । दक्षिणायनोत्तरायणभेदेन द्विविधमयनं कर्मविशेषे तयोर्विनियोगश्च दर्शितः । वसन्तग्रीष्मवर्षाशरद्धेमन्त-शिशिरभेदात् षोढा ऋतवः । ते च चान्द्राः सौराश्च । तेषां विषय-विशेषे विनियोगश्च समर्थितः । चान्द्र-सौर-सावन-नाक्षत्रभेदात् चतुर्विधो मासः । चान्द्रोऽपि दर्शान्त-पूर्णिमान्तभेदात् द्विविधः । कर्म-विशेषे च तेषां विनियोगः कथितः । तेषु चान्द्र एव मासोऽसं-क्रान्तो मलमासो भवति । स चोत्तरमासान्तर्गतः । एकवर्षे असं-क्रान्तमासद्वयपाते तद्वर्षे एको मासो द्विसंक्रान्तोऽपि भवति । तेषु चादिमः संसर्पाख्यः, अन्तिमोऽधिमासः, द्विसंक्रान्तस्तु क्षयमास इत्यंहस्पतिरिति चोच्यते । तेषु किं कर्म करणीयं किं वा न करणी-यमित्येतत् सर्वमुक्तम् ।

तृतीये प्रतिपत्प्रकरणे तिथयो निर्णीताः। तिथीनां शुद्धात्व-विद्धात्वे निरूपिते। प्रतिपादि उपवासैकभक्तनक्तायाचितव्रतदानभेदेन षड्विधदैवकर्म्मणः, एकोद्दिष्टपार्वणभेदेन द्विविधपित्र्यकर्मणश्च कालो निरूपितः।

चतुर्थे द्वितीयादिप्रकरणे द्वितीयाद्या दर्शान्तास्तिथयः कर्मयोग्यतया निरूपिताः। इष्टौ पर्व निर्णीतम्। पर्वसन्धिश्च व्यवस्थापितः। इष्टेरिष्टविकृतीनां चानुष्ठानकालो दर्शितः।

पञ्चमे नक्षत्रादिप्रकरणे नक्षत्र-योग-करण-वारा निरूपिताः। संक्रान्तिपुण्यकालः, तत्र कर्त्तव्यं च दर्शितम्। ग्रहणं निर्णीतम्। तत्र ग्रहणविशेषे क्षेत्रविशेषस्य नदीविशेषस्य च माहात्म्यमुपदर्शितम्। ग्रहणे भोजन-विधिनिषेधौ चिन्तितौ। ग्रहणे वेधश्च निरूपितः।

उपोद्घातप्रकरणस्यादौ श्लोकैरेकाऽनुक्रमणिका ग्रन्थकृता रचिता। या कालमाधवकारिकेत्याख्यायते। सा त्वतीव समीचीना, विचारसहिता, समस्तव्यवस्थानिर्णायिका च। मूलग्रन्थमनधीत्यापि केवलं तयैव शक्यन्ते कर्मविशेषेषु तिथिविशेषा निर्णेतुम्।

अस्य ग्रन्थस्य शोधनार्थं चत्वारि पुस्तकानि संगृहीतानि। एकं अस्यातिकसमाजपुस्तकालयस्थं सो० चिह्नितं नातिसमीचीनम्। अपरं कलिकाता-शोभाविपणिस्थराजगृहादानीतं क० चिह्नितं नातिपरिशुद्धम्। अन्यत्काशीतः क्रीतं मु० चिह्नितं प्रायः परिशुद्धम्। इतरत् श्रीमदीश्वरचन्द्रविद्यासागरमहाशयपुस्तकालयादाहृतं वि० चिह्नितं परिशुद्धम् प्रायः सर्व्वत्रैव विवरणसहे स्थाने विवरणं कृतम्। अस्य शोधनादौ यथामति कृतो यत्नः, तथापि यद्यदसङ्गतमुपलभ्यते तत्तत् कृपया शोधनीयं विद्वद्भिरिति शिवम्।

सोऽयं ग्रन्थो महामहोपाध्यायेन माधवाचार्य्येण रचित इत्येतदुपक्रमणिकायामेव स्पष्टम्। माधवाचार्य्यश्च बुक्कणमहाराजस्य कुलगुरुर्मन्त्री चासीदित्येतदप्यत्रैव व्यक्तम्। सोऽयं मायणाचार्य्यस्य श्रीमत्याश्च पुत्रः प्रख्यातस्य वेदभाष्यादिग्रन्थकर्त्तुः सायणाचार्य्यस्य भ्राता यजुःशाखी भारद्वाजगोत्रश्चेति। एतत्प्रणीतप-

राशरस्मृतिव्याख्यातोऽवगम्यते । तथाच तदुपक्रमणिकागतौ श्लोकौ,—

"श्रीमती जननी यस्य सुकीर्त्तिर्मायणः पिता ।
सायणो भोगनाथश्च मनोबुद्धी सहोदरौ ॥
यस्य बौधायनं सूत्रं शाखा यस्य च याजुषी ।
भारद्वाजं कुलं यस्य सर्व्वज्ञः स हि माधवः ॥" इति ।

सोऽयं सायणाचार्य्यस्याग्रज एवासीन्न त्वनुजः,—इति सायणाचार्य्यकृतयज्ञतन्त्रसुधानिधिग्रन्थादवगम्यते । तथाच तद्ग्रन्थे सायणाचार्य्येणोक्तम्,—

"तस्याभूदन्वयगुरुस्तत्त्वसिद्धान्तदर्शकः ।
सर्व्वज्ञः सायणाचार्य्यो मायणार्य्यतनूद्भवः ॥
उपेन्द्रस्येव यस्यासीदिन्द्रः सुमनसां प्रियः ।
महाक्रतूनामाहर्त्ता माधवार्य्यसहोदरः ॥" इति ।

अतएव सायणाचार्य्येण ज्येष्ठे भ्रातरि भक्त्यतिशयात् प्रायः स्वनिर्म्मिता ग्रन्था माधवीयतया निर्दिष्टाः । न तु माधवसायणयोरैक्यमिति भ्रमितव्यं, उक्तप्रमाणेभ्यस्तयोर्भेदावगतेः । परं सायणेति माधवाचार्य्यानुजनामवत् वंशनामापीति प्रतीयते । तथाच सायणाचार्य्यविरचितायां माधवीयाख्यायां धातुवृत्तौ उपक्रमणिकायां तेनोक्तम्,—

"तस्य मन्त्रिशिखारत्नमस्ति मायणसायणः ।
यः ख्यातिं रत्नगर्भेति यथार्थयति पार्थिवीम् ॥
तेन मायणपुत्रेण सायणेन मनीषिणा ।
आख्यया माधवीयेयं धातुवृत्तिर्विरच्यते ॥"

अत्र हि पूर्व्वश्लोके मायणस्य सायणतयोल्लेखो वंशनामत्वमस्यावगमयति । उत्तरश्लोके च व्यक्तमस्य व्यक्तिविशेषनामत्वमभिहितम् । सायणशब्दस्य वंशनामत्वादेव सर्व्वदर्शनसंग्रहे माधवाचार्य्यस्यापि सायणतयोल्लेखः सङ्गच्छते । यथा,—

" श्रीमत्सायणमाधवः प्रभुरुपन्यास्थत् सतां प्रीतये ।"

सायणशब्दस्य वंशनामत्वं सुव्यक्तमवगम्यते तत्रैव । यथा,—

" श्रीमत्सायणदुग्धाब्धिकौस्तुभेन महौजसा ।
क्रियते माधवार्य्येण सर्व्वदर्शनसंग्रहः ॥ "

कालमाधवाद्युपक्रमणिकासु " सोऽहं प्राप्य विवेकतीर्थपदवीं"—इति स्वयमभिधानात् " विवेकतीर्थ " इत्युपाधिर्माधवाचार्य्यस्यासीदित्यवगम्यते । " विवेकतीर्थेति पदवीमभिधां"—इति कालमाधवटीकायां व्याख्यातम् । सोऽयं भारतीतीर्थाभिधस्य कस्यापि यतीन्द्रस्य शिष्य इत्येतदेतत्कृतग्रन्थेषु वहुशो लेखदर्शनादवगम्यते । परं सर्व्वदर्शनसंग्रहे शार्ङ्गपाणितनयः सर्व्वज्ञविष्णुगुरुरपि नमस्कृतोऽनेन ।

अनेन किल माधवाचार्य्येण जैमिनीयन्यायमालाविस्तरोऽपि निरमायि, पुराणसारोऽपि व्याख्यातः । तथा च न्यायमालागतौ श्लोकौ,—

" निर्माय माधवाचार्य्यो विद्वदानन्ददायिनीम् ।
जैमिनीयन्यायमालां व्याचष्टे बालवुद्धये ॥
श्रुतिस्मृतिसदाचारपालको माधवो वुधः ।
स्मार्त्तं व्याख्याय सर्व्वार्थं द्विजार्थं श्रौतमुद्यतः ॥ "

उत्तरश्लोकः स्वयमेव व्याख्यातो यथा,—सर्व्ववर्णाश्रमानुग्रहाय पुराणसारपराशरस्मृतिव्याख्यानादिना स्मार्त्तो धर्म्मः पूर्व्वं व्याख्यातः, इदानीं द्विजानां विशेषानुग्रहाय श्रौतधर्म्मव्याख्यानाय प्रवृत्तः इति । वेदभाष्यन्तु न माधवाचार्य्यप्रणीतं, किन्तु तदनुजसायणाचार्य्यप्रणीतमेव । तथा च सायणाचार्य्यकृतयज्ञतन्त्रसुधानिधिग्रन्थे सायणाचार्य्यं प्रति सभासदामुक्तिः,—

" अधीताः सकला वेदास्ते च दृष्टार्थगौरवाः ।
त्वत्प्रणीतेन तद्भाष्यप्रदीपेन प्रथीयसा ॥ "

अतएव वेदभाष्ये जैमिनीयन्यायमालाश्लोकोद्धरणवेलायां

न्यायविस्तरकार आह,—इत्युक्तिः सङ्गच्छते। अतएव च वेद-भाष्यादौ सायणाचार्य्यकृतितयोल्लेखः। यच्च क्वचित्,

"कृपालुर्माधवाचार्य्यो वेदार्थं वक्तुमुद्यतः।"

इत्युक्तिर्दृश्यते, साऽपि ज्येष्ठे भ्रातरि भक्त्यतिशयख्यापनार्था। स्वकृतेरेव तत्कृतितयोल्लेखस्तस्मिन् भक्त्यतिशयमेव ख्यापयति। अतएव तत्रैव तत्तत्प्रपाठकादिपरिसमाप्तौ "इति सायणाचार्य्य-विरचिते माधवीये वेदार्थप्रकाशे" इति पुष्पिकायां लिखितम्। सोऽयं बुक्कस्य बुक्कणस्य वा महाराजस्य कुलगुरुर्मन्त्री चासीत्। बुक्कस्तु चन्द्रवंशी सङ्गमनाम्नो महाराजस्यात्मजः। बुक्कस्यात्मजस्तु हरिहरनामा आसीत् इति यज्ञतन्त्रसुधानिधौ सुव्यक्तम्। यथा,—

"वंशे चान्द्रमसे तदन्वयनिधिः श्रीसङ्गमोऽभून्नृप-
स्तस्मात् प्रादुरभूदभीष्टसुरभिः श्रीबुक्कपृथ्वीपतिः॥
हरिहरनिभभूमा कामदोऽभूज्जगत्यां
हरिहरनरपालस्तस्य भूष्णुस्तनूजः॥"

मायणस्तु सङ्गमस्य मन्त्री बभूव इति माधवीयधातुवृत्तौ दृश्यते। यथा,—

"अस्ति श्रीसङ्गमक्ष्मापः पृथ्वीतलपुरन्दरः।
तस्य मन्त्रिशिखारत्नमस्ति मायणसायणः॥"

सायणस्तु बुक्कस्य परतो हरिहरस्य च मन्त्री आसीदिति तदी-याद्वेदभाष्यात् यज्ञतन्त्रसुधानिधिग्रन्थाच्चावगम्यते। स खल्वयं माधवाचार्य्यः रामानुजाचार्य्यात् जैनहेमचन्द्राचार्य्यात् काव्य-प्रकाशाच्च पराचीन इति एतत्कृतसर्व्वदर्शनसंग्रहे तेषामुल्लेखदर्श-नादवधार्य्यते।

तदेवं माधवसायणयोर्ग्रन्थेभ्यो यावत्तयोरितिवृत्तमुपलब्धुं शक्यं, तावदेव मयोपनिबद्धं, नात्र किमपि स्वप्रतिभयोट्टंकितं कल्पनया वा कलुषीकृतम्। इत्यास्तां विस्तरः।

श्रीचन्द्रकान्तशर्म्मा।

# वर्णक्रमानुसारिणी कालमाधवस्य विषयसूची ।



इति वर्णक्रमानुसारिणी कालमाधवस्य विषयसूची समाप्ता ।

श्रीगणेशाय नमः ।

# काल-माधवः ।

तत्र

## प्रथममुपोद्घात-प्रकरणम् ।



वागीशाद्याः सुमनसः सर्व्वार्थानामुपक्रमे ।
यं नत्वा कृत-कृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
सोऽहं प्राप्य विवेक-तीर्थ-पदवीमाम्नाय-तीर्थे परं
मज्जन् सज्जन-सङ्ग-तीर्थ-निपुणः सद्वृत्त-तीर्थं श्रयन् ।
लब्धामाकलयन् प्रभाव-लहरीं श्रीभारती-तीर्थतो-
विद्या-तीर्थमुपाश्रयन् हृदि भजे श्रीकण्ठमव्याहतम् ॥ २ ॥
सत्यैक-व्रत-पालको द्विगुणधीस्त्र्यर्थी चतुर्व्वेदिता
पञ्च-स्कन्ध-कृती षडन्वय-दृढः सप्ताङ्ग-सर्व्वंसहः ।
अष्ट-व्यक्ति-कला-धरो नव-निधिः पुष्यद्दश-प्रत्ययः
स्मार्त्तोच्छ्राय-धुरन्धरो विजयते श्रीबुक्कण-क्ष्मा-पतिः ॥ ३ ॥

---

१ विवेकतीर्थेति पदवीमाभिधां, विवेकस्य आत्मानात्मविवेकस्य प्रतिपादकं तीर्थं शास्त्रमुपायो वा तस्य पदवीं सरणिं च प्राप्य, इति टीकासम्मता व्याख्या । अनया च व्याख्या 'विवेकतीर्थ' इति माधवाचार्य्यस्योपनाम आसीदिति प्रतीयते ।

२ सत्यरूपमेकं मुख्यं एकसंख्यं च यत् व्रतं, तस्य पालकः । अन्यापेक्षया द्विगुणा धीर्यस्य सोऽयं द्विगुणधीः । अथवा द्वौ गुणौ सत्त्वरजसी यस्यां तादृशी धीर्यस्य । सात्त्विकी राजसी च बुद्धिर्न तामसीत्यर्थः । बुद्धेस्त्रिगुणत्वेऽपि द्विगुणत्वोक्तिराधिक्याभिप्रायेण । त्रीन् धर्म्मार्थकामानर्थयते इति त्र्यर्थी । चतुर्णां वेदानां, साम-दान-भेद-दण्डरूपाणामुपायानां, "आन्विक्षिकी त्रयी वार्त्ता दण्डनीतिश्च शाश्वती । विद्याश्चैताश्चतस्रस्तु लोकसंस्थिति-हेतवः" —इत्युक्तविद्यानां वा वेदिता । पञ्चसु स्कन्धेषु रूप-वेदना-विज्ञान-संज्ञा-संस्कारेषु सौगताद्युक्तेषु, "सहायाः साधनोपाया विभागो देशकालयोः । विनिपातप्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते"—इत्युक्तलक्षणेषु मन्त्राङ्गेषु वा, कृती कुशलः ।

व्याख्याय माधवाचार्य्यो धर्मान् पाराशरानथ ।
तदनुष्ठान-कालस्य निर्णयं वक्तुमुद्यतः* ॥ ४ ॥
व्यामूढानामिह तनुभृतां जाह्नवी तीर्थमेकं[१]
विद्यातीर्थं प्रकृति-विमलं सद्विवेकोदयानाम् ।
सर्व्वेषां तत् प्रथम-सुखदं ‡ भारती[२] तीर्थमाहु-
स्तद्भावान्मे विपुल-मनसो † निश्चये शक्तिरस्ति ॥ ५ ॥
अर्थोऽनुक्रम्यते श्लोकैरखिला निर्णिनीषितः ।
तावतैवानुतिष्ठासुर्निःसन्देहः § प्रवर्त्तताम् ॥
ततो मीमांसु-चित्तस्य समाधानाय तत् पुनः ।
विवरिष्ये यथान्यायं श्रुति-स्मृति-वचोवलात् ॥
पञ्च प्रकरणान्यत्र तेषूपोद्घात-वत्सरौ ।
प्रतिपत् शिष्टतिथयो नक्षत्रादिरिति क्रमः[३] ॥

---

* कर्तुमुद्यतः,—इति पाठान्तरम् । ‡ परमसुखदं,—इति पाठान्तरम् । † विमल-मनसो,—इति पाठान्तरम् । § निःसन्देहं,—इति मु० पुस्तके पाठः।

---

षण्णां " सन्धिर्नां विग्रहो यानमासनं द्वैधमाश्रयः,"—इत्युक्तलक्षणानामन्वयेन दृढः । " स्वाम्यमात्य-सुहृत्-कोश-राष्ट्र-दुर्ग-वलानि च । सप्ताङ्गानि "—इत्युक्तलक्षणानि सप्त अङ्गानि यस्यां तादृशी सर्व्वंसहा पृथिवी यस्य । अष्टानां व्यक्तिकलानां बुद्धिगुणानां धरः, अष्टौ व्यक्तयो मूर्त्तयो यस्यासौ अष्टव्यक्तिर्महादेवः तस्य कलाया अंशस्य धरः इति वा । अष्टानां व्यक्तीनां लोकपालानां कलाधर इत्यन्ये । नवानां रसानां प्रभावादीनां वा निधिः । अथवा नवसंख्यका निधयः " महापद्मश्च पद्मश्च शंखो मकरकच्छपौ । मुकुन्द-कुन्द-नीलाश्च खर्व्वश्च निधयो नव ॥ "—इत्युक्तलक्षणा यस्य इत्यर्थः । पुष्यन्तो वर्द्ध-मानाः दश प्रत्ययाः सम्पद्धेतवः शास्त्रादयो यस्य, पुष्यन् दशसु दिक्षु वेदवेदाङ्गेषु वा, प्रत्ययो ज्ञानं यस्येति वा ।

१ तीर्थं पुरुषार्थप्राप्त्युपायभूतम् । २ भारती सरस्वती तीर्थम् । भारतीतीर्थं तन्नामानं निजगुरुं प्रथमसुखदमाहुरिति वा । तस्मिन् चरमतीर्थे भावात् श्रद्धातिशयेन मनःसंयोगात् भक्त्यतिशयाद्वा, विपुलं विस्तृतं सकल-विषय-ग्राहि मनो यस्य, तस्य मे इत्यर्थः । विमलमनस इति पाठे, विमलं संशय-शून्यं मनो यस्येत्यर्थः । ३ उप समीपे उद्धृत्य हन्यते इत्युपोद्घातः स च " चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्व्वुधाः " —इत्युक्तलक्षणः । प्रकृत-निर्व्वाहक-साधारण-परिभाषेति केचित् । प्रतिपदिति भिन्नं

उपोद्घाते[1] काल-सत्त्वं तस्य निर्णय-योग्यता ।
ईश्वरो नित्यकालात्मा चिन्तनीयः स कर्मसु ॥
जन्ये कालेऽब्दमुख्यत्वम्-उक्तमेतच्चतुष्टयम्[2] ।

---

अब्दा[3]यनर्तुमासाश्च पक्षः प्रकरणान्तरे ॥
अब्दैः[4] पञ्चविधश्चान्द्रो व्रतादौ * तिलकादिके ।
सुजन्मादिव्रते सौरो गोसत्रादिषु सावनः ॥
त्रयोऽप्याचार्य्य-सेवादौ विकल्प्यन्ते निजेच्छया ।
आयुर्दाये हि नाक्षत्रो बार्ह[5]स्पत्योऽधिवत्सरे ‖ ॥
चान्द्रा[6]णां प्रभवादीनां पञ्चके पञ्चके युगे ।
संपरीदान्विदित्येतां‡च्छब्दपूर्व्वास्तु वत्सराः ॥
तिलो यवो वस्त्र-धान्ये† रजतं दीयतेऽत्र तु[7] ।
उग्रे[8] कर्म्मणि शान्ते च स्तोऽयने दक्षिणोत्तरे ॥

---

* अब्दास्त्रिधा तत्र चान्द्रो व्रतादौ,--इति सो॰पुस्तके पाठः । ‖ नास्तीदमर्द्धं सो॰ पुस्तके । ‡ सम्परीदान्विद्देत--इति सो॰ पुस्तके पाठः । † वस्त्रधान्य-- इति मु॰ पुस्तके पाठः ।

---

पदम् । तथा च, १ उपोद्घातप्रकरणम्, २ वत्सर-प्रकरणम्, ३ प्रतिपत्प्रकरणम्, ४ अवशिष्टद्वितीयादितिथिप्रकणरम्, ५ नक्षत्रादिप्रकरणम्,—इति पञ्च प्रकरणानि । नक्षत्रादिरित्यादिपदात् योग-करण-ग्रहणकालादयोऽप्यत्र ।

१ उपोद्घात-प्रकरण-प्रतिपाद्यार्थमाह उपोद्घाते इत्यादिना, उक्तमेतच्चतुष्टयमित्यन्तेन । २ जन्यकाले विषये अब्दस्य मुख्यत्वं निमेषादीनां तदाश्रयतया गौणत्वमित्यर्थाल्लभ्यते । एतच्चतुष्टयमुपोद्घाते उक्तमिति सम्बन्धः । ३ द्वितीय-प्रकरण-प्रतिपाद्यार्थमाह अब्दे-त्यादिना, कृष्णः पित्र्ये विशिष्यते इत्यन्तेन । प्रकरणान्तरे वत्सरप्रकरणे । ४ अब्दभे-दानाह अब्द इति । तन्नामानि सव्यवस्थान्याह चान्द्रो व्रतादाविति तिलकादिके चान्द्र इति संबंधः । ५ मध्यमगणनया गुरोः संक्रान्तिशून्यो यश्चान्द्रवत्सरः सोऽयमधिवत्सर इति वक्ष्यते । ६ चान्द्रस्यावान्तरभेदमाह चान्द्राणामिति । प्रभवादयः षष्टिसंख्यकाः संवत्सराश्चान्द्राः, तेषु द्वादश-पञ्चकानि, तत्रैकैकस्मिन् पञ्चके क्रमेण संवत्सरादयः भवन्ति । तत्र संवत्सरः प्रथमः, परिवत्सरो द्वितीयः, इदावत्सरस्तृतीयः, अनुवत्सरश्चतुर्थः, इद्व-त्सरः पञ्चम इति विवेकः । सोऽयं युगसंज्ञितः कालः । ७ अत्र प्रभवादिपञ्चके यथाक्रमं तिलादिपञ्चकं दीयते इत्यर्थः । ८ अयनविभागमाह उग्रे इति ।

वसन्ताद्यृतवो[1] द्वेधा चान्द्राः सौराश्च चान्द्रकाः[‡] ।
चैत्राद्या, अथ[§] मीनाद्या मेषाद्या वा विवस्वतः ॥
तेष्वाधानादयस्तद्वत् षण्मूर्त्ति-व्रत-पूजनम् ।
मासास्तु[2] सावनः सौरश्चान्द्रो नाक्षत्र[‖] इत्यमी ॥
दर्शान्तः[3] पूर्णिमान्तो वा चान्द्रोऽसौ विप्र-वैश्ययोः ।
सौरो राज्ञः, सावनस्तु यज्ञे, ज्योतिषिके परः ॥
माघादि-मास-भेदेषु तिल-दानादयः स्मृताः ।
चान्द्रोऽधिमासो[4]ऽसंक्रान्तः सोऽन्तर्भवति चोत्तरे ॥
असंक्रातावेकवर्षे द्वौ चेत् संसर्प आदिमः[5] ।
क्षयमासो द्विसक्रान्तः स चाहस्पति-संज्ञकः ॥
त्रयस्त्याज्या विवाहादौ, संसर्पाहपस्ती उभौ ।
शुद्धौ श्रौते तथा स्मार्त्ते[6],मलमासो विविच्यते ॥
काम्यारम्भं तत्-समाप्तिं मलमासे विवर्ज्जयेत् ।
आरब्धं मलमासात् प्राक् कृच्छ्रं सत्रादिकं तु यत्[*] ॥
तत् समाप्यं सावनस्य मानस्यानतिलङ्घनात्[†][7] ।
आरम्भस्य समाप्तेश्च मध्ये स्याच्चेन्मलिम्लुचः ॥

---

‡ चान्द्रगाः,—इति मु० पुस्तके पाठः । § ह्यथ,—इति मु० पुस्तके पाठः । ‖ नक्षत्र—इति मु० पुस्तके पाठः । * कृच्छ्रसत्त्राब्दिकं च यत्,—इति सो० पुस्तके पाठः । † मासस्यानतिलङ्घनात्,—इति सो० पुस्तके पाठः ।

---

१ ऋतून् विभजते वसन्तादीति । तथा च चान्द्रा वसन्ताद्या ऋतवश्चान्द्रं चैत्रमारभ्य प्रवर्त्तन्ते । सौरास्तु रवेर्मीनराशिभोगमारभ्य मेषराशिभोगमारभ्य वा प्रवर्त्तन्ते,—इति विवेकः । २ मासविभागमाह मासास्त्विति । ३ सव्यवस्थं चान्द्रादीनां स्वरूपमाह दर्शान्त इत्यादि । विप्रस्य दर्शान्तः, वैश्यस्य पूर्णिमान्त - इत्यर्थः । परः नाक्षत्रः । ४ चान्द्रमासे विशेषान्तरमाह चान्द्रोऽधिमास इत्यादिना । सः अधिमासः उत्तरे प्रकृते मासि अन्तर्भवतीत्यर्थः । ५ अर्थादन्तिमोऽधिमास इति भावः । ६ तथा च अधिमाससंसर्पाहस्पतिषु त्रिष्वेव विवाहादिमङ्गलकर्म्माणि न कार्य्याणि । श्रौतस्मार्त्तकर्म्माणि तु संसर्पाहस्पत्योः कार्य्याणीत्यर्थः । ७ तथा च यत्र नवतिदिनसाध्यं कर्म्मारब्धं तत्र तथाविधसावनमानानुरोधेन मलमासेऽपि तत्समापनं कार्य्यमित्यर्थः ।

प्रवृत्तमखिलं काम्यं तदाऽनुष्ठेयमेव तु ।
कारी[1]र्य्यादि तु यत् काम्यं तस्यारम्भ-समापने ॥
कार्य्ये काल-विलम्बस्य प्रतीक्षाया असम्भवात् ।
अनन्यगतिकं नित्यमग्निहो[2]त्रादि न त्यजेत् ॥
गत्यन्तर-युतं नित्यं सोमयागादि वर्ज्जयेत् ।
अगा[3]ति ग्रहण-स्नानं जातेष्टिर्गति-संयुता ॥
द्वयं नैमित्तिकं, तस्य व्यवस्था नित्यवन्मता ।
शुद्धमास-मृतानां स्यान्मलिने प्रथमाब्दिकर्म[4] ॥
मलमास-मृतानां तु मले स्यादाब्दिकान्तरम्[5] ।
[6]दैवे मुख्यः शुक्लपक्षः कृष्णः पित्र्ये विशिष्यते ॥

---

तृतीये[7] तु प्रकरणे वर्णिता* प्रतिपत्तिथिः ।
प्रतिपन्नाम विज्ञेया चन्द्रस्य प्रथमा कला[8] ॥
शुक्लपक्षे विशे[9]च्चन्द्रं कृष्णपक्षे विनिःसरेत् ।

---

* वर्ण्यते,—इति पाठान्तरम् ।

---

१ कारीरी नाम यागविशेषः । अवग्रहेण शुष्यतां शस्यानां वृद्ध्या सञ्जीवनं तत्फलम् अतस्तत्र कालप्रतीक्षा न सम्भवति । २ अग्निहोत्रादेरनन्यगतिकत्वमहरहः कर्त्तव्यत्वात् । तद्वैपरीत्याच्च सोमयागादेर्गत्यन्तरयुतत्वं वोध्यम् । ३ अगतीति अनन्यगतिकमित्यर्थः । ग्रहणस्नानस्यानन्यगतिकत्वं च मलिम्लुचे ग्रहणे सति तद्विहितस्य स्नानस्य शुद्धमासे कर्त्तुमशक्यत्वात् वोध्यम् । "वैश्वानरं द्वादशकपालं निर्व्वपेत् पुत्रे जाते"—इति विहिताया जातेष्टेः पुत्रजननानन्तरकाले प्राप्तत्वेऽपि जातेष्टि-जातकर्म्म-स्तन्यपानानां क्रमेण विहितत्वात् तदानीं तत्करणे च कदाचित् वालविपत्ति-शङ्कापि स्यात्, अतस्तथाशङ्कायामशौचापगमेऽपि तदाचरणात् तस्याः सगतिकत्वमिति भावः । तथा च अनन्यगतिकं नैमित्तिकं मलमासेऽपि कार्य्यं गत्यन्तरयुतन्तु नेत्यर्थः । ४ पूर्व्वाब्दे शुद्धचैत्रादौ मृतानां पराब्दे चैत्रादेर्म्मलमासत्वे मलमास एव प्रथमाब्दिकं स्यादित्यर्थः । ५ मलमासचैत्रादौ मृतस्य प्रत्याब्दिकश्राद्धं पुनश्चैत्रादेर्मलमासत्वे मलमास एव कर्त्तव्यं न तु शुद्धचैत्रे इत्यर्थः । ६ सव्यवस्थं पक्षभेदमाह दैवे इति । ७ तृतीय-प्रकरण-प्रतिपाद्यार्थमाह तृतीये त्वित्यादिना नोद्धंगा इह इत्यन्तेन ग्रन्थेन । ८ कलाविशेषवाचिनः प्रतिपच्छब्दस्य तिथिविशेषे प्रवृत्तौ निमित्तन्तु प्राथम्यमेवोभयसाधारणमित्युन्नेयम् । ९ चन्द्रादिति शेषः । अत्र प्रथमायाः कलायाः कर्त्तृत्वेनान्वयो बोध्यः ।

शुद्धा[1] विद्धा तिथिः, शुद्धा हीना तिथ्याऽन्ययाऽहनि ॥
उदये पूर्व्वया तिथ्या विध्यते त्रिमुहूर्त्तकैः ।
सायं तूत्तरया तद्वत्[2] न्यूनया तु न विध्यते ॥
वेध्याऽपि त्रिमुहूर्त्तैव न न्यूना वेधमर्हति[3] ।
शुद्धायां नास्ति सन्देहो दैवे पित्र्ये च कर्म्मणि[4] ॥
उपवासश्चैकभक्तं नक्तं चायाचितं व्रतम्[4]* ।
दानं च षड्विधं दैवं क्रमादत्र विविच्यते ॥
एकोद्दिष्टं पार्व्वणश्च पित्र्यं द्विविधमीर्य्यते ।
शुक्लपक्षे दर्श-विद्धा कृष्णे विद्धा द्वितीयया ॥
उपोष्या प्रतिपच्छुक्ले[5] मुख्या स्यादापराह्णिकी ।
तदभावे तु सायाह्न-व्यापिनी‡ परिगृह्यताम् ॥
प्रातः-सङ्गव-मध्याह्नापराह्णाः सायमित्यसौ[6] ।
अत्राह्नः† पञ्चधा भागो मुख्यो द्वित्र्यादिभागतः ॥

---

* चायाचितव्रतम्,—इति सो॰ पुस्तके पाठः । ‡ सायाह्ने व्यापिनी,—इति मु॰ पुस्तके पाठः । † तत्राह्नः,—इति पाठान्तरम् ।

---

१ निर्णेय-तिथि-परिचयार्थं तिथि-विभागमाह शुद्धेति । तिथिः प्रथमतो द्विविधा शुद्धा विद्धा च । तत्र सूर्य्योदयमारभ्य सूर्य्यास्तपर्य्यन्तकालरूपे अहनि अन्यया पूर्व्वया उत्तरया वा तिथ्या रहिता तिथिः शुद्धेत्यर्थः । "इदमपि तावन्मात्र-साध्ये कर्म्मणि । एतेन सूर्य्योदयमारभ्य द्वितीयसूर्य्योदयपर्य्यन्ता सर्व्वत्र कर्म्मणि शुद्धेति कैमुतिकन्यायेन सूचितम्"—इति टीका । २ तद्वदिति त्रिमुहूर्त्तकैर्विध्यते इत्यर्थः । तथा च वेधिकायास्तिथेर्द्वैविध्यात् विद्धाया द्वैविध्यमुन्नेयम् । उभयशेषमाह न न्यूनेति । ३ तथा च विद्धाया एव निर्णेयत्वं न शुद्धाया इति फलितम् । "तत्रापि मन्वादि-युगादि-ग्रहण-वैधृति-व्यतीपातेषु तत्कालव्यापितैव"—इति टीका । ४ उपवासोऽहोरात्राभोजनसङ्कल्प-पालनरूपः, तदहोरात्रान्तर्द्वितीयभोजनाभावविशिष्टं मध्याह्न-भोजनमेकभक्तं, तादृशमेव प्रदोष-भोजनं नक्तं, अयाचित-लब्धस्य तादृशमेव भोजनमयाचितं, व्रतं पूजादिरूपम् । ५ "मतान्तरमाह शुक्ले इति । कृष्णे चेत्यपि बोध्यम् । मुख्येति सूचितानुकल्पमाह तदभावे त्विति । अत्र, तुना स्यादित्यादिना चास्य स्वानभिमतत्वं सूचितम्"—इति टीका । ६ द्विधा, त्रेधा, चतुर्धा, पञ्चधा, पञ्चदशधा,—इत्येते मतभेदेन पञ्चाह्नो विभागाः सन्ति, तत्र पञ्चधा भागो मुख्य इत्यर्थः । सर्व्वमेतदग्रे स्फुटीभविष्यति ।

अभावेऽपि प्रतिपदः संकल्पः प्रातरिष्यते ।
तिथिस्त्रियामतोऽर्व्वाक् चेत् तिथ्यन्ते पारणं भवेत् ॥
यामत्रयोर्ध्वगामिन्यां प्रातरेव हि पारणम्‡ ।
वल्युत्सवं च पूर्व्वेद्युरुपवासवदाचरेत् ॥
मुख्यतिथ्यन्तराये तु तिथि-शेषोऽपि गृह्यताम्[१] ।
शुद्धाधिका तु कृष्णाऽपि पूर्व्वा संपूर्त्ति-सम्भवात् ॥[२]
गृहीतव्या त्वेकभक्ते मध्याह्न-व्यापिनी तिथिः ।
परेद्युरेव तद्व्याप्तिः, पूर्व्वेद्युर्व्वा, दिनद्वये* ॥
नोभयत्रोभयत्रांशे साम्यं वैषम्यमित्यमी[३] ।
षट् पक्षास्तेषु[४] चैकैकव्याप्तौ सैवात्र गृह्यताम् ॥
दिनद्वयेऽपि तद्व्याप्तावव्याप्तौ चैकदेशतः ।
सम-व्याप्तौ च पूर्व्वैव वैषम्ये त्वधिकेष्यताम्[५] ॥
अन्याङ्गस्यैकभक्तस्य कालस्त्वङ्गचनुसारतः† ।
उपवास-प्रतिनिधेस्तिथिः‖ स्यादुपवासवत्[६] ॥
प्रदोष-व्यापिनी नक्ते तिथिर्व्याप्तिर्दिनद्वये ।
अव्याप्तिर्वाऽथवांऽशेन व्याप्तिः स्यात् सर्व्वथोत्तरा[७] ॥

---

‡ नास्तीदमर्द्धं सो० पुस्तके । * परेद्युरेव पूर्व्वेद्युरेव व्याप्तिर्दिनद्वये,—इति सो० पुस्तके पाठः । † कालस्तदनुसारतः—इति पाठान्तरम् । ‖ उपवासप्रतिनिधेः स्थितिः,—इति मु० पुस्तके पाठः ।

---

१ समाप्यते इति शेषः । २ पूर्व्वविद्धैव तिथिर्मुख्या तद्विधानात् । पूर्व्वविद्धाया-मन्तराये विघ्ने सति । विघ्नेन पूर्व्वविद्धायां विहितकर्म्माकरणे उत्तरविद्धायामपि तत्कर-णमिति फलितार्थः । ३ पूर्व्वेद्युरेव मध्याह्नव्याप्तिरित्येकः पक्षः । उत्तरेद्युरेव तथेत्यपरः दिनद्वयेऽपि मध्याह्न-व्याप्तिरित्यन्यः । नैकस्मिन्नपि दिने मध्याह्न-व्याप्तिरित्यपरः । कस्मिन्नपि दिने न सम्पूर्ण-मध्याह्न-व्याप्तिः किन्तूभयत्रैवांशतस्तद्व्याप्तिरित्यन्यः पक्षः । अयं च पक्षोंऽशस्य साम्य-वैषम्याभ्यां द्विधा भिद्यते,—इत्थमी षट् पक्षाः । ४ तत्र व्यवस्था आह तेषु चेति । ५ अव्याप्तौ चेति च्छेदः एकदेशतः । समव्याप्तौ चेत्यन्वयः । ६ तथा चैकभक्तत्रयं सिद्धं प्रधानमन्याङ्गमुपवास-प्रतिनिधि-रूपञ्चेति । ७ पूर्व्ववदत्रापि षट् पक्षाः । तत्र पूर्व्वेद्युरेव परेद्युरेव वा व्याप्तौ संशयाभावात् अवशिष्टपक्षेष्वेकमेव निर्ण-यमाह व्याप्तिरित्यादिना । अंशेन व्याप्तिर्द्विविधा साम्येन वैषम्येण चेत्यर्थः ।

सौरनक्ते तु सायाह्न-व्यापिनी[1] न प्रदोषगा ।
अयाचिते तु तिथयः स्वीकार्य्या उपवासवत् ॥
सोदयत्रिमुहूर्त्तायां[2] कुर्य्याद्दानं व्रतानि च ।
[3]उभयत्र तथात्वे तु * पूर्व्वेद्युस्तदनुष्ठितिः ॥
परत्रैव तथात्वं चेत्; पूर्व्वा ग्राह्या तिथि-क्षये ।
तिथेः साम्ये च वृद्धौ च गृह्यतां तिथिरुत्तरा[4] ॥
अस्पर्शे चैकदेशस्य व्याप्तौ पूर्व्वैव गृह्यताम्[5] ।
एकोद्दिष्टे तु मध्याह्न-युक्ता स्यादेकभक्तवत् ॥
एकदेश-सम-व्याप्तौ क्षये पूर्व्वाऽन्यथोत्तरा[6] ।
[7]कुतपाद्यपराह्णान्त†व्याप्तिराब्दिक उत्तमा ॥
तदभावेऽपराह्णस्य व्यापिका गृह्यतां तिथिः ।
[8]क्षये पूर्व्वोत्तरा वृद्धौ व्याप्तिश्चेदपराह्णयोः ॥
न ग्राह्य-तिथि-गौ ‡ वृद्धि-क्षयावूर्ध्व-तिथेस्तु तौ ।

---

* उभयत्र तु साम्ये तु,—इति सो० पुस्तके पाठः । † कुतपाद्यपराह्णान्ते,—इति सो० पुस्तके पाठः । ‡ न ग्राह्यतिथिजौ,—इति मु० पुस्तके, न ग्राह्या तिथिगौ,—इति सो० पुस्तके पाठः ।

---

१ मुख्येति शेषः । प्रदोष-व्याप्तिस्तु तत्रानुकल्प इति भावः । २ उदयेन सहितास्त्रयो मुहूर्त्ता यस्यामिति विग्रहः । ३ अत्रापि पूर्व्ववत् षट् पक्षाः । तत्र पूर्व्वेद्युरेव तथात्वे संशयाभावात् अवशिष्टपक्षेषु क्रमेण निर्णयमाह उभयत्रेति । ४ यदा तु पूर्व्वेद्युः सोदय-त्रिमुहूर्त्तमस्पृष्ट्वा परेद्युरेव सोदय-त्रिमुहूर्त्तं व्याप्नोति, तदा ग्राह्य-तिथेर्वृद्धि-क्षय-साम्यानुरोधेन निर्णयः । तत्र ग्राह्यतिथेः क्षये पूर्व्वा, साम्ये वृद्धौ चोत्तरेति वक्तुलार्थः । ५ दिनद्वये सोदय-त्रिमुहूर्त-स्पर्शाभावे साम्य-वैषम्याभ्यामेकदेशव्याप्तौ चोत्तरेत्यर्थः । ६ अत्रापि पूर्व्ववत् षट् पक्षाः । तत्रैकदेशे समव्याप्तौ ग्राह्य-तिथेर्वृद्धि-साम्य-क्षयैर्निर्णयः, अवशिष्ट-पक्षेष्वेकभक्तवत् निर्णय इत्यर्थः । ७ पार्व्वणे तन्निर्णयमाह कुतपादीति टीका । प्रत्याब्दिक-परोऽयं ग्रन्थ इत्यन्ये । अह्नोऽष्टमो मुहूर्त्तः, कुतपः । तस्य द्वादश-मुहूर्त्तेनापराह्ण-समाप्तिः । तथा च, कुतपादि-मुहूर्त्त-पञ्चक-व्यापिनी मुख्येत्यर्थः । ८ अत्रापि पूर्व्ववत् षट् पक्षाः पूर्व्वेद्युरेव परेद्युरेव वा तद्व्याप्तौ संशयाभावः । उभयत्रापराह्णव्याप्तौ क्षय-वृद्धिभ्यां निर्णयः । उभयदिने कृत्स्नापराह्ण-व्याप्तौ अभिमतायास्तिथेर्वृद्धि-नियमेन ग्राह्य-तिथि-क्षयासम्भवादाह न ग्राह्यतिथिगाविति ।

साम्ये तूर्ध्व-तिथेर्ग्राह्या † पर-विद्धैव वृद्धिवत् ॥
[1] न स्पृशेदपराह्णौ चेत् ‡ पूर्व्वा स्यात्, कुतपो वृथा ।
वैषम्येणैकदेशस्य व्याप्तौ ग्राह्या महत्त्वतः ॥
[2] साम्येन चेत्, क्षये पूर्व्वा, परा स्याद्वृद्धि-साम्ययोः ।
वृद्धि-साम्य-क्षया ग्राह्य§तिथिगा नोर्ध्वगा इह ॥

---

[3] द्वितीयाद्यास्तु पर्वान्तास्तुर्य्य-प्रकरणोदिताः ।
सञ्चारणीयः सामान्यात् तिथिषु प्रतिपन्नयः ॥
क्वचित् क्वचित् विशेषोऽस्ति सोऽयमत्राभिधीयते ।
पूर्वेद्युरसती प्रातः परेद्युस्त्रि-मुहूर्त्त-गा ।
सा द्वितीया परोपोष्या पूर्व-विद्धा ततोऽपरा * ।
रम्भा-तृतीया पूर्वा स्यादुत्तरा स्याद् व्रतान्तरे ॥
परेद्युर्नास्ति चेत् ‖ पूर्वविद्धाप्यस्तु व्रतान्तरे ।
मुहूर्त्तमात्र-सत्त्वेऽपि दिने गौरी-व्रतं परे+ ॥

---

† साम्यात्तूर्द्धतिथेर्ग्राह्या,—इति मु० पुस्तके पाठः । ‡ न स्पृशत्यपराह्णौ चेत्,—इति सो० पुस्तके पाठः । § ग्राह्या—इति सो० पुस्तके पाठः । * ततोऽन्यथा—इति पाठान्तरम् । ‖ परेऽह्नि नास्ति चेत्,—इति मु० पुस्तके पाठः । + 'परेद्युर्नास्ति चेत्,—इत्यादि 'गौरीव्रतं परे'—इत्यन्तो ग्रन्थः सो० पुस्तके नास्ति ।

---

१ दिनद्वयेऽपराह्णस्पर्शाभावे निर्णयमाह न स्पृशेदिति । परदिने कुतपसत्त्वादाह परेद्युः कुतपो वृथा, न नियमक इत्यर्थः । महत्त्वत आधिक्येन । २ साम्येनैकदेश-प्राप्तौ निर्णयमाह साम्येन चेदिति पूर्व्ववदत्रोत्तरतिथेर्व्वृद्ध्यादिकं न नियामकं किन्तु ग्राह्यतिथेरेवेत्याह वृद्धिसाम्येत्यादिना । ३ चतुर्थ-प्रकरण-प्रतिपाद्यार्थमाह द्वितीयाद्यास्तु इत्यादिना, पर्व्वण्येवेति निर्णयः इत्यन्तेन ग्रन्थेन । सामान्यात् समानत्वात् । तिथिषु द्वितीयाद्यासु । नयो निर्णयः । ४ प्रातः मुहूर्त्तत्रयात्मके । अपरा भिन्नाः पूर्व्वेद्युस्त्रिमुहूर्त्त-व्यापिनी परेद्युस्तदव्यापिनी सर्व्वथाऽसती वेत्यर्थः । अयमर्थः । यद्यपि द्वितीया कृष्णा पूर्व्वा, शुक्ला परा,—इति सामान्यतो निर्णयस्तथापि पूर्व्वेद्युः त्रिमुहूर्त्तव्यापित्व एव कृष्णा पूर्व्वा, नोचेत् परैव, यदि परदिनेऽपि त्रिमुहूर्त्त-न्यूना नास्त्येव वा तदापि पूर्व्वैव । एवं परदिने त्रिमुहूर्त्तव्यापित्व एव शुक्ला परा, यदि परदिने ततो न्यूना नास्त्येव वा तदा सापि पूर्व्वैवेति ।

शुद्धाधिकायामप्येवं गण-योगप्रशंसनात्[1] ॥
चतुर्थी तु परोपोष्या[2] गणनाथ-व्रतस्य तु ।
मध्याह्न-व्यापिनी पूज्या तद्वन्नाग-चतुर्थ्यपि ॥
[3]परेद्युरेव मध्याह्न-व्याप्तौ विघ्नस्य सोत्तरा ।
अन्यथा पूर्व-विद्धैव मातृ-योग-प्रशस्तितः ॥
[4]पूर्वेद्युरेव तद्व्याप्तौ पूर्वा सर्प-प्रिया तिथिः ।
नोचेत्, सर्पस्य पञ्चम्या योगोऽत्यन्तं प्रशस्यते ॥
गौर्य्याः[5] शुद्ध-जयाऽप्यस्तु नाग-विद्धा निषिध्यते ।
सर्वत्र पञ्चमी पूर्वा ग्राह्या स्कन्द-व्रते परा[6] ॥
नाग-विद्धा स्कन्द-षष्ठी सा निषिद्धा व्रतान्तरे ।
उत्तरस्या अलाभे तु नाग-विद्धैव* गृह्यताम् ॥
विना द्वादश-नाडीभिर्नाग-वेधो न दोषकृत्[7] ।

---

* नागविद्धापि,—इति सो० पुस्तके पाठः ।

---

१ परे दिने,—इत्यन्वयः । ‘ मुहूर्त्तमात्रेति पूर्व्वविद्धा-विषयम् ’ इति टीका । परदिने मुहूर्त्तमात्र-सत्त्वेऽपीत्यन्ये । ते तु वदन्ति, मुहूर्त्तमात्रेति मतान्तरं न तु ग्रन्थकर्त्तुर्मतं तन्मते त्रिमुहूर्त्तादर एवेति । सर्व्वमिदं टीकायां विस्तरेणोक्तं तत्रैव द्रष्टव्यम् । ‘ शुद्धाधिकायामिति तु पूर्व्वदिने घटिकात्रयोत्तरं प्रवृत्त-विषयं तदा तस्याः खण्डात्वेऽपि द्विविध-विद्धात्वाभावेन पूर्णवत् शुद्धत्वात्’—इति टीका । गणो गणपतिस्तात्तिथिः चतुर्थी । २ उपोष्येति वैदिककर्म्ममात्रोपलक्षणम् । अयं च निर्णयो गणेश-नागगौरी-व्रतोपवास-पूजाऽन्य-विषयः । ३ गणेशव्रते विशेषमाह परेद्युरेवेति । विघ्नो विघ्नेशः गणेश इत्यर्थः । अन्यथा अन्येषु चतुर्षु पक्षेषु । अत्रापि पूर्व्ववत् षट् पक्षा द्रष्टव्याः । माता मातृ-देवताका तृतीया । मध्याह्न-व्याप्तिश्चात्र संपूर्ण-मध्याह्न-व्याप्तिरेकदेश-व्याप्ति-पक्षेऽधिक-व्याप्तिश्चेति द्विविधा वोद्धव्या । ४ नागव्रते विशेषमाह पूर्व्वेद्युरेवेति । तद्व्याप्तौ प्राग्वत् द्विधा मध्याह्नव्याप्तौ । नोचेदिति अन्येषु चतुर्षु पक्षेष्वित्यर्थः । अत्रापि पूर्व्ववत् षट् पक्षाः । सर्पस्य सर्पदैवतचतुर्थ्याः । ५ गौरीव्रते विशेषमाह गौर्य्या इति । व्रते इति शेषः । शुद्धजयेति वहुव्रीहिः, तृतीया-युतेत्यर्थः । तत्र हेतुः नागविद्धेति । यत इत्यादिः । ५ परेति सापि त्रिमुहूर्त्त-चतुर्थी-वेधे परदिने त्रिमुहूर्त्तसत्त्वे अन्यथा तु पूर्व्वैवेति हेमाद्रिः । उपवासे पूर्व्वा तदन्यकर्म्मसु परेत्यपि पक्षान्तरं स एवाह । सर्व्वा कृष्णा पूर्व्वा शुक्ला परेति गौडाः । ७ षण्मुहूर्त्त-पञ्चमी-विद्धाया एव त्याज्यत्वं न त्रिमुहूर्त्त-विद्धायाः,—इति भावः । अयञ्च षण्मुहूर्त्त-पञ्चमी-विद्ध-निषेधो नक्तैकभक्तादि-व्यतिरिक्त-विषयः,—इति हेमाद्रिः । तदपि पूर्व्वदिन एव मध्याह्नादि-व्याप्तौ द्रष्टव्यामिति टीका ।

सप्तमी पूर्व-विद्धैव व्रतेषु निखिलेष्वपि ॥
अलाभे * पूर्व-विद्धायाः परविद्धैव † गृह्यताम् ।
व्रतमात्रेऽष्टमी कृष्णा पूर्वा, शुक्लाऽष्टमी परा ॥
दूर्वाष्टमी तु शुक्लाऽपि पूर्व-विद्धा विधीयते ।
पक्ष-द्वयेऽप्युत्तरैव शिव-शक्ति-महोत्सवे[1] ॥
ज्येष्ठर्क्ष-योगे पूर्वाऽपि ‡ ग्राह्या ज्येष्ठा-व्रते तिथिः ।
मध्याह्नादूर्द्ध्वमृक्षं चेत् परेद्युः सा प्रशस्यते ॥
ज्येष्ठर्क्ष-भानुवाराभ्यां युक्ताष्टम्यतिदुर्लभा[2] § ।
जयन्त्याख्यं व्रतं भिन्नं कृष्ण-जन्माष्टमी-व्रतात् ॥
शुद्धा च सप्तमी-विद्धेत्येवं जन्माष्टमी द्विधा ।
सप्तमी चेत् निशीथात् प्राक् विद्धा, शुद्धाऽन्यथा भवेत्[3] ॥
शुद्धायां नास्ति सन्देहो विद्धा च त्रिविधेष्यते ।
निशीथ-योगः पूर्वेद्युः परेद्युर्वा द्वयोरुत[4]¶ ॥
पूर्वैव प्रथमे पक्षे परैवोत्तर-पक्षयोः ।
अष्टमी रोहिणी-युक्ता जयन्ती, सा चतुर्विधा ।
शुद्धा शुद्धाधिकेत्येवं विद्धा विद्धाधिकेति च[5] ।

---

* अभावे,—इति टीकासम्मतः पाठः । † परविद्धापि,—इति सो० पुस्तके पाठः । ‡ पूर्व्वैव,—इति भट्टादिधृतः पाठः । § योगोऽष्टम्याः सुदुर्लभः,—इति सो० पुस्तके पाठः । ¶ परेद्युर्व्वोभयोरुत,—इति मु० पुस्तके पाठः ।

---

१ मिलित-शिव-शक्ति-दैवत्य-व्रते नवमी-युतैवेत्यर्थः । २ परेद्युरेव ऋक्षयोगे परैव, पूर्व्वेद्युरेव तद्योगे पूर्व्वा । स च ऋक्षयोगो यदि पर दिने मध्याह्नादूर्द्ध्वमप्यनुवर्त्तते, तदा परैव । यदा भानुवार-योगो भवति, तदा ऋक्षभानुवार-योगो भवति, तदा ऋक्षभानुवारयोगेनैव निर्णय इति भावः । ३ यद्यप्यन्यत्र दिवावेध उक्तः, तथापि जन्माष्टम्यां रात्रि-वेधोऽपि । स च रात्रि-वेधस्तदा सम्पद्यते, यदि सूर्य्यास्तोत्तरं निशीथादर्व्वाक् कियत्यपि सप्तमी स्यात्, नोचेदष्टमी शुद्धैव भवतीति भावः । ४ उतेति निपातो वा-शब्दार्थे द्रष्टव्यः।पूर्व्वेद्युः परेद्युरित्युभयत्रावधारणं बोध्यम् । ५ या पूर्व्व-दिने सप्तमी-योगमप्राप्ता सती तत्रैव परिसमाप्यते, साऽष्टमी शुद्धा । या तु पूर्व्वदिने सम्पूर्णा सती परदिनेऽपीषन्निःसरति सा शुद्धाधिका । या पुनः सप्तमी-युक्तापि पूर्व्वदिन एव परिसमाप्यते, सा विद्धा । या तु पूर्व्वदिने सप्तमीविद्धा सती परदिनेऽपि निःसरति, सा विद्धाधिकेति विवेकः ।

शुद्धायामपि विद्धायां न सम्भाव्योत्तरा तिथिः ॥
शुद्धाधिकायां † योगश्चेदेकस्मिन् ‡ वा दिनद्वये ।
नैक-योगेऽस्ति सन्देहो द्वि-योगे प्रथमं दिनम् ॥
सदा निशीथे पश्चाद्वेत्युत्तमो मध्यमोऽधमः ।
योगस्त्रिधाऽपि पूर्वेद्युः संपूर्णत्वादुपोषणम् ॥
विद्धाधिकायामप्येक-दिन-योगे * स गृह्यताम् ।
द्वयोर्योगस्त्रिधा भिन्नो निशीथे वृत्ति-भेदतः ॥
तद्वृत्तिर्दिन एकस्मिन् उभयोर्नोभयोरिति ।
एकस्मिंश्चेत् तद्दिनं स्यात् पक्षयोरन्त्ययोः परम् ‖ ॥
बुधे सोमे जयन्ती चेत् वारे साऽतिफलप्रदा § ।
तिथ्यृक्षयोर्द्वयोरन्त उत्तमं पारणं भवेत् ॥
एकस्यान्ते मध्यमं स्यादुत्सवान्तेऽधमं स्मृतम् ।
यस्मिन् वर्षे जयन्त्याख्यो योगो $ जन्माष्टमी तदा ॥

---

† शुद्धाधिकाया,—इति सो० पुस्तके पाठः । ‡ योगः स्यादेकस्मिन्,—इति पाठान्तरम् । * दिने योगे,—इति मु० पुस्तके पाठः । ‖ परा,—इति मु० पुस्तके पाठः । § सति फलप्रदा,—मु० पुस्तके पाठः । $ जयन्त्याख्ययोगो,—इति सो० पुस्तके पाठः ।

---

१ अत्र शुद्धायां विद्धायाञ्चोत्तरतिथेः सम्भावनैव नास्तीत्याह शुद्धायामिति । २ द्वितीयपक्षस्य सनिर्णयमवान्तरभेदमाह शुद्धादिकायामिति । योगो रोहिणी-योगः । एकयोगे, एकस्य दिनस्य रोहिणी-योगे । द्वियोगे द्वयोर्दिनयो रोहिणी-योगे । ३ शुद्धाधिकायां सदा अहोरात्रे, अर्थात् पूर्व्वदिने सूर्य्योदयमारभ्य प्रवृत्तो नक्ष-त्रयोगः परेद्युरुदयपर्य्यन्तमनुवर्त्तमान उत्तमः । निशीथे अर्द्धरात्रे, निशीथमारभ्य प्रवृत्तो मध्यमः । पश्चान्निशीथादूर्द्ध्वं प्रवृत्तोऽधमः । एते त्रयोऽपि पक्षाः फल-तारतम्यायैवो-पयुज्यन्ते । उपवासस्तु सर्व्वत्र पूर्व्वदिन एवेत्यर्थः । ४ चतुर्थपक्षस्यावान्तरभेदं सनि-र्णयमाह विद्धाधिकायामिति । स एकदिनयोगः । ५ निशीथे वृत्तिभेदतः,—इत्येतद्व्याचष्टे तद्वृत्तिरित्यादिना । एकस्मिन् दिने पूर्व्वत्रैव परत्रैव वा दिने, तद्वृत्तिरर्द्धरात्रे रोहिणी-योगः । परं परदिनम् । ६ वार-विशेष-योगस्तु फलाधिक्याय न तु निर्णया-येत्याह बुधे इति । बुधे सोमे वारे इत्यन्वयः । ७ पूजोपवासजागरणरूप उत्सवः । तदन्ते तत्समाप्तौ द्वितीयदिने प्रातः-काले इत्यर्थः ।

अन्तर्भूता जयन्त्यां स्याद्दक्ष-योग-प्रशस्तितः ।
नवमी पूर्व-विद्धैव पक्षयोरुभयोरपि ॥
मध्याह्ने रामनवमी पुनर्वसु-समन्विता ।
ग्राह्या, नैवाष्टमी-युक्ता सनक्षत्राऽपि वैष्णवैः ॥
कृष्णा पूर्वोत्तरा शुक्ला दशमम्येवं व्यवस्थिता ।
जयन्ती-व्रतवन्नित्यं काम्यं चैकादशी-व्रतम् ॥
अरुणोदय-वेधोऽत्र वेधः सूर्य्योदये तथा ।
उक्तौ द्वौ दशमी-वेधौ वैष्णव-स्मार्त्तयोः क्रमात् ॥
कला-काष्ठादि-वेधोऽपि ग्राह्योऽत्र त्रिमुहूर्तवत् ।
वैखानसाद्यागमोक्त-दीक्षां प्राप्तो हि वैष्णवः ॥
विद्धा त्याज्या वैष्णवेन शुद्धाऽप्याधिक्य-सम्भवे ।
एकादशी द्वादशी वाऽधिका चेत् त्यज्यतां दिनम् ।
पूर्वं, ग्राह्यं तूत्तरं स्यादेष वैष्णव-निर्णयः ॥
एकादशी द्वादशी चेत्युभयं वर्धते यदा ।
तदा पूर्व्व-दिनं त्याज्यं स्मार्त्तैर्ग्राह्यं परं दिनम् ॥

---

१ यदाप्युक्तनिर्णयानुसारेण जन्माष्टमी पूर्व्वदिने जयन्ती परदिने, तदा पूर्व्व-निर्णयमुपेक्ष्यालभ्य-योग-वशात् परदिन एव तदनुष्ठानामिति टीका । रोहिण्यष्टम्योर्योगाभावे तु जन्माष्टमीव्रतमेवानुष्ठेयमिति वोध्यम् । २ मध्याह्नोऽत्र पञ्चधा विभागेन । त्रिधा विभागेनेति केचित् । अष्टममुहूर्त्त एवात्र मध्याह्नः कृष्णाष्टम्यां मध्यरात्रवदित्यपरे । तथा च रामनवमी मध्याह्न-व्यापिनी ग्राह्या, दिनद्वये मध्याह्न-व्याप्तौ तदव्याप्तौ तदेक-देश-व्याप्तौ वा पुनर्व्वसु-युता, दिन-द्वये पुनर्व्वसु-योगे मध्याह्ने तद्योगवती, दिनद्वयेऽपि मध्याह्ने तद्योगे मध्याह्नं विहाय तद्योगे वा सर्व्वथाऽयोगे वा उत्तरैवेति टीका-सम्मता व्यवस्था । ३ उदयात् प्राक् चतस्रो नाडिका अरुणोदयः । तत्र दशमी-प्रवेशेऽरुणोदय-वेधः, सूर्य्योदये तत्प्रवेशे सूर्य्योदयवेध इति विवेकः । ४ आदिना नारद-पञ्चरात्रादि । हिः प्रसिद्धौ । तेनाप्रसिद्ध-वैष्णवोऽपि भागवताख्यः सूचितः । यद्यपि स स्मार्त्त एव, तथापि तेनारुणोदय-विद्धाऽपि सर्व्वथा त्याज्येति सूचन-फलम् इति टीका । ५ अत्रापि ‘ त्याज्या ’ इत्यनुषङ्गः । ६ आधिक्यं त्रेधेत्याह एकादशीति । अत्रै-कादशी द्वादशीति द्वयं सावधारणं तन्मात्रमधिकमित्यर्थः । वा-शब्देनोभयाधिक्य-संग्रहः । आधिक्यं चात्र द्वितीयदिने निःसरणमात्रं वोध्यम् । पूर्वमिति पूर्व्वत्रान्वयि ।

एकाद[1]शीमात्र-वृद्धौ गृहि-यत्योर्व्यवस्थितिः ।
उपोष्या गृहिभिः पूर्व्वा यतिभिस्तूत्तरा तिथिः ॥
द्वादशीमात्र-वृद्धौ तु शुद्धा-विद्धे व्यवस्थिते ।
शुद्धा पूर्वोत्तरा विद्धा स्मार्त-निर्णय ईदृशः ॥
श्र[2]वणेन युता चेत्स्याद्द्वादशी सा हि वैष्णवैः ।
स्मार्त्तैश्चोपोषणीया स्यात्त्यजेदेकादशीं तदा ॥
उपवास-व्रतादन्य-व्रते सार्द्ध-मुहूर्त्तकैः ।
सप्तभिर्दशमी-विद्धामेतामेकादशीं त्यजेत् ॥
द्वा[3]दशीपूर्व-विद्धैव व्रतेषु निखिलेष्वपि ।
शुक्ल[4]-त्रयोदशी पूर्वा परा कृष्णा त्रयोदशी* ॥
अलाभे साऽपि पूर्वैव, पराऽनङ्ग-त्रयोदशी† ।
या शुक्ला गृह्यते पूर्वा, गृह्यतां साऽऽपराह्णिकी ॥
च[6]तुर्दश्युत्तरा शुक्ला पूर्वा कृष्णा चतुर्दशी ।
उदये द्विमुहूर्त्ताऽपि‡ ग्राह्याऽनन्त-व्रते तिथिः ॥
शुक्ला[7]ऽपि रात्रि-युक्ता स्याच्चैत्र-श्रावण-मासयोः ।

---

* कृष्णात्रयोदशी,—इति का० पुस्तके पाठः । † पूर्व्वाऽनङ्गत्रयोदशी,—इति मु० सो० पुस्तकयोः पाठः । ‡ त्रिमुहूर्त्तापि,—इति मु० का० पुस्तकयोः पाठः ।

---

१ स्मार्त्तं प्रति निर्णयमाह, 'एकादशी' इत्यादिना, 'स्मार्त्तनिर्णय ईदृशः'—इत्यन्तेन । व्यवस्थितिश्चोत्तरार्धेन स्पष्टीकृता । एवं परत्र । २ यथोक्तनिर्णयस्यापवादमाह, श्रवणेनेति । यदा द्वादश्यामेव श्रवणनक्षत्रं, तदा शुद्धैकादशीमपि त्यक्त्वा द्वादश्यामेवोपवासेदित्यर्थः । ३ द्वादश्यां निर्णयमाह द्वादशीति । ४ त्रयोदश्यां निर्णयमाह शुक्लेति । परदिने त्रिमुहूर्त्तालाभे कृष्णत्रयोदश्यपि पूर्व्वैव सर्व्वकर्म्मसु ग्राह्या । परेति 'मार्गशीर्षशुक्लत्रयोदशी परविद्धैवेत्यर्थः । पूर्व्वानङ्गेत्यपाठः"—इति टीका । ५ या शुक्ला त्रयोदशी पूर्व्वाग्राह्यत्वेनोक्ता, सा न सायाह्नमात्रव्यापिनी । किन्त्वापराह्णिकीत्यर्थः । ६ चतुर्दश्यां निर्णयमाह चतुर्दशीति । "उपवासभिन्नविषयमिदम्"—इति टीका । विशेषमाह उदये इति । द्विमुहूर्त्तापीत्यपिना द्विमुहूर्त्तादिपरिग्रहः । "त्रिमुहूर्त्तापीत्यपपाठः"—इति टीका । ७ दमनक-पवित्रारोहणयोर्निर्णयमाह शुक्लापीति । पूर्व्वैवेत्यर्थः ।

शुक्ला[1] सर्वाऽपि पूर्वैव यदि स्यादापराह्णिकी ॥
प्रदोषे[2] वा निशीथे वा द्वयोर्वा याऽस्ति सा भवेत्।
शिवरात्रि-व्रते, तत्र द्वयोः सत्ता प्रशस्यते ॥
तदभावे निशीथैक-व्याप्ताऽपि परिगृह्यताम्* ।
तस्याश्चासम्भवे ग्राह्या प्रदोष-व्यापिनी तिथिः ॥
तिथ्यन्ते पारणं याम-त्रयादर्वाक् समापने[3] ।
अन्यथा पारणं प्रातरन्य-तिथ्युपवासवत् ॥
पूर्व[4]-विद्धैव सावित्री-व्रते पञ्चदशी तिथिः ॥
नाड्योऽष्टादश भूतस्य स्युश्चेन्नचा† परेऽहनि ॥
व्रतान्तराणि सर्वाणि परेऽहन्येव सर्वदा[5] ।
श्राद्धेऽपराह्ण-कालीनो दर्श आब्दिकवन्मतः ॥
दिन-द्वयेऽप्येक-देशे वृत्तौ‡ ग्राह्यो महत्त्वतः ।
तुल्यत्वं चेदेक-देशे क्षये पूर्वोऽन्यथोत्तरः[6] ॥
कृत्स्न-व्याप्तौ द्वयोरह्नोरुत्तरस्तिथि-वृद्धितः[7] ।

---

* तदभावे निशीथैकव्यापिनी गृह्यतां तिथिः,—इति पाठान्तरम्। † स्युश्चेत्तत्र—इति मु० का० पुस्तकयोः पाठः। ‡ दिनद्वयेऽप्येकदेशवृत्तौ,—इति का०पुस्तके पाठः।

---

१ रुद्रदैवत्योपवासे निर्णयमाह शुक्ला सर्व्वापीति। अपिर्भिन्नक्रमे, सर्व्वाशुक्लापीत्यर्थः। अपिना कृष्णापरिग्रहः। ' यदि स्यात् '—इत्यनेनापराह्णेऽलाभे पराऽपीति सूचितम्। २ शिवरात्रौ निर्णयमाह प्रदोषे वेति। सा शिवरात्रिव्रते भवेदित्यन्वयः। प्रदोषे वेत्यादिविकल्पत्रयस्य व्यवस्थितत्वं दर्शयति तत्रेत्यादिना। ३ याभत्रयादर्व्वाक् चतुर्दश्याः समापने सति इति शेषः। ४ पञ्चदश्यां निर्णयमाह पूर्व्वविद्धैवेति। पञ्चदशी चात्र शुक्ला कृष्णा च। चेदिति पूर्व्वत्रान्वयि। यद्यपि पूर्व्वदिने चतुर्दश्या अष्टादश नाड्यः सन्ति तथापि पूर्व्वविद्धैवेत्यर्थः। एवकार-व्यवच्छेद्यमाह न परेऽहनीति। पाठान्तरे तु तत्र पूर्व्वदिने भूतस्याष्टादशनाड्यः सन्ति चेत्, तदा परेऽहनि व्रतं न तत्र पूर्व्वविद्धा ग्राह्येत्यर्थः साहजिकः। टीकायान्तु, " तत्र परेऽहनीति पाठेऽपि तस्मिन् परे उत्कृष्टे पूर्व्वरूपेऽहनि, तस्य ताः स्युर्यद्यपि"—इति कष्टकल्पनया व्याख्यातम्। ५ सर्व्वाणि उपवासादीनि। सर्व्वदा तादृशवेधे सति असति च। ६ अन्यथा इत्यस्य वृद्धिसाम्ययोरित्यर्थः। अत्र क्षयादिकग्राह्यतिथेरेव बोध्यम्। ७ अत्र साम्यक्षययोरसम्भवात् तिथिवृद्धित इत्युक्तम्।

सा[1]ग्न्यनाग्नि-व्यवस्था स्यान्न स्याच्चेदपराह्णयोः† ॥
पूर्वेद्युः साग्निकः कुर्यादुत्तरेद्युरनाग्निकः‡ ।
प[2]र्व-प्रतिपदोः सन्धिर्मध्याह्ने वा ततः पुरा ॥
अन्वाधानं पूर्व-दिने यागः सन्धि-दिने भवेत् ।
ऊर्ध्वं मध्याह्नतः सन्धावन्वाधानन्तु§ तद्दिने ॥
इष्टिं पर-दिने कुर्यादन्यो वाजसनेयिनः ।
यस्तु वाजसनेयी स्यात् तस्य सन्धि-दिनात्पुरा ॥
न काप्यन्वाहितिः‖ किन्तु सदा सन्धि-दिने हि सा¶ ।
स[3]न्धिश्चेत् सङ्गवादूर्ध्वं प्राक् पर्य्यावर्तनाद्रवेः * ॥
सा पौर्णमासी विज्ञेया सद्यस्काल-विधौ † तिथिः ।
वृ[4]द्धिः प्रतिपदो याऽस्ति तदर्द्धं पर्वणि क्षिपेत् ॥

---

† न चेत् स्यादपराह्णयोः,—इति का० पुस्तके पाठः । ‡ निराग्निकः—इति का० पुस्तके पाठः । § वन्वाधानं हि,—इति सो० पुस्तके पाठः । ‖ काप्यन्वाहितिः,—इति मु० पुस्तके पाठः । ¶ सन्धिदिने तु सा,—इति पाठान्तरम् । * प्राक् चेदावर्त्तनाद्रवेः,—इति का०सो०पुस्तकयोः पाठः। † सद्यः कालविधौ,—इति मु०पुस्तके पाठः ।

---

१ अपराह्णद्वयास्पर्शे आब्दिकाद्विशेषमाह साग्न्यनग्नीति । सैवाधिकारिभेदेन व्यवस्था परार्द्धेन स्पष्टीकृता । २ इष्टौ पर्व्वनिर्णयमाह पर्व्वेत्यादिना निर्णय इत्यन्तेन ग्रन्थेन । ३ पूर्णिमायां विशेषमाह सन्धिश्चेदिति । सङ्गवः पञ्चधा विभक्तदिनस्य द्वितीयो भागः । पर्य्यावर्त्तनमह्नोऽष्टममुहूर्त्तः । ४ प्रसिद्धसन्धिनिरासाय विशेषमाह वृद्धिरिति । यदा घटिकान्यूने मध्याह्ने पर्व्वसमाप्तिः परेद्युश्च घटिघा-चतुष्टय-वृद्धि-वशात् मध्याह्नादूर्द्ध्वं घटिकात्रयं प्रतिपदनुवृत्तिः, तदा घटिका-चतुष्टय-वृद्धेरर्द्धस्य घटिकाद्वयस्य पर्व्वणि प्रक्षेपे पूर्व्वेद्युर्मध्याह्नादूर्द्ध्वमपि घटिकामात्रं पर्व्वानुवृत्तिर्लभ्यते । ततश्च तत्र सन्धिदिनेऽन्वाधानं परेद्युरिष्टिरिति फलितम् । दृश्य-पर्व्वसमाप्त्यनुसारेण सन्धिनिर्णये तु तत्र सन्धिदिने इष्टिः तत्पूर्व्व-दिनेऽन्वाधानमिति प्राप्नोति । एवं यत्र पूर्व्वदिने मध्याह्नात्परतो घटिकामात्रं पर्व्वानुवृत्तिः परदिने च घटिकाचतुष्टयं प्रतिपदुपक्षयः, तत्र क्षयार्द्धस्य घटिकाद्वयस्य पर्व्वणि प्रक्षेपे मध्याह्नात् पूर्व्वघटिकातः सन्धिर्भवति । तत्र स्वाभाविकसन्ध्यनुसारेण सन्धिदिनेऽन्वाधानं परदिने चेष्टिः प्राप्नोति, क्षयप्रक्षेपे तु सन्धिदिने इष्टिः पूर्व्वदिने अन्वाधानमिति विशेषः ।

क्षयस्यार्द्धं तथा हित्वा ‡ सन्धिर्निश्चीयतां सदा ।
बौधायन[1]-मते दर्श-श्राद्धं चेष्टिर्विशिष्यते ॥
द्वितीया[2] त्रिमुहूर्त्ता चेत् प्रतिपद्यापराह्णिकी § ।
अन्वाधानं चतुर्दश्यां दर्शे स्वल्पेऽपि वर्तयेत् ॥
दर्श-श्राद्धं तथा कार्य्यमिति बौधायनोऽब्रवीत् * ।
इष्ट्यादि-विकृतिः सर्वा पर्वण्येवेति निर्णय[3]ः ॥

---

पञ्च[4]मे तु प्रकरणे पूर्वार्द्धे भादि-निर्णयः ।
उत्तरार्द्धे काल-भेदात् कर्म-भेदोपदर्शनम् † ॥
य[5]स्मिन्नस्तमियाद्भानुस्तन्नक्षत्रमुपोषणे ।
मुख्यं, तस्यासम्भवे तु ग्रहीतव्यं निशीथयुक् ॥
उपवासे यदृक्षं स्यात् तद्धि नक्तैक[6]-भक्तयोः ।
उदये त्रिमुहूर्त्तस्थं नक्षत्रं व्रत-दानयोः ॥
दिन-द्वये तथात्वे तु पूर्वं स्याद्बल[7]वत्त्वतः ।
श्रवणं तू[8]त्तरं ग्राह्यमुपाकरण-कर्मणि ॥
पित्र्ये तु तिथिवत्सर्वो नक्षत्रस्य विनिर्णयः ।

---

‡ क्षिप्ता,—इति सो॰पुस्तके पाठः । § प्रतिपच्चापराह्णिकी,—इति का॰मु॰ पुस्तकयोः पाठः । * बौधायनोदितम्,—इति सो॰ पुस्तके पाठः । † कर्म्मभेदोपदेशनम्,—इति मु॰का॰ पुस्तकयोः पाठः ।

---

१ आश्वलायनमतेन निर्णीय बौधायनमतेन निर्णयमाह बौधायनेति । चो भिन्नक्रमः श्राद्धमिष्टिश्चेत्यर्थः । २ तदुक्तिमेव पठति द्वितीयेति । या प्रातिपत् आपराह्णिकी, ततो द्वितीया यदि सूर्य्यास्तात् प्राक् त्रिमुहूर्त्ता, तदा सा प्रतिपत् इष्टियोग्या न किन्तु ततः पूर्व्वदिनमेव । अतएवाह अन्वाधानमिति । ३ इष्टिर्दर्शपौर्णमासेष्टिः । आदिना पशुसोमौ गृह्येते । एतत् सर्व्वं प्रकृतिः, विकृतयस्तु "ऐन्द्राग्नमेकादशकपालं निर्व्वपेत्"—इत्यादिना विहिताः । ४ पञ्चमप्रकरणप्रतिपाद्यार्थमाह पञ्चमेत्विति । पूर्व्वार्द्धे पूर्व्वभागे । भं नक्षत्रम् । आदिना योग-करण-वार-परिग्रहः । उत्तरार्द्धे उत्तरभागे कालविशेषेण कर्म्मविशेषनिरूपणमित्यर्थः । संक्रान्त्यादिनिरूपणमिति यावत् । ५ नक्षत्रनिर्णयमाह यस्मिन्निति । मुख्यामिति पूर्व्वान्वयि । ६ तथा च नात्र तिथिवत् मध्याह्नप्रदोषव्याप्त्या निर्णय इति भावः । ७ संपूर्णाहोरात्र-व्यापित्वाद्बलवत्त्वं बोध्यम् । ८ उत्तरं धनिष्ठायुक्तम् ।

पूर्व्वः[1] * स्यादुपवासादावुत्तरो व्रत-दानयोः ॥
योगः श्राद्धे कर्म-काल-व्याप्तस्तु परिगृह्यताम् ।
करणं[2] यद्दिने तत्तु ग्राह्यं, रात्रौ यदा, तदा ॥
दिनद्वयैकभक्ताभ्याम्† उपवासः प्रसिध्यति ।
वारेषु संशयाभावात् ग्रहीतव्यं यथास्थितम् ॥
आसन्न[3]-नाड्यः संक्रान्तेः पुण्याः स्नानादि-कर्मसु ।
चरे तु‡ कर्कटे पूर्वा मकरे विंशतिः पराः ॥
वर्त्तमाने तुला-मेषे नाड्यस्तूभयतो दश ।
वृषभादौ स्थिरे पुण्याः प्राक् पश्चादपि षोडश ॥
मिथुनादौ द्वि-स्वभावे[4] उत्तराः षष्टि-नाडिकाः ।
अहः-संक्रमणे रात्रावनुष्ठान-निषेधतः ॥
उक्तौ कालौ व्यवस्थाप्यौ तद्वशात्§पूर्व-पश्चिमौ[5] ।
रात्रौ संक्रमणे भानोर्दिनार्द्धं स्नान-दानयोः ॥
अर्द्धरात्रादधस्तस्मिन् मध्याह्नस्योपरि क्रिया ।
ऊर्ध्वं संक्रमणे चोर्ध्वं, उदयात् प्रहर-द्वयम्[6] ॥
पूर्णे चेदर्धरात्रे तु यदा संक्रमते रविः ।

---

* पूर्व्वः स्यात्,—इत्यारभ्य, ग्रहदोषो न विद्यते,—इत्यन्तो ग्रन्थः सो० पुस्तके भ्रष्टः । † दिनद्वयैकभक्तायाम्,—इति मु० पुस्तके पाठः । ‡ चरेषु,—इति मु० पुस्तके पाठः । § तद्बलात्,—इति का० पुस्तके पाठः ।

---

१ योगे निर्णयमाह पूर्व्वः स्यादिति । पूर्व्वः पूर्व्व-दिन-संवन्धी । आदिना नक्तैकभक्त-परिग्रहः । योग इति सर्व्वत्र विशेष्यतयाऽन्वेति । २ करणे निर्णयमाह करणमिति । करणस्य तिथ्यर्द्धमितत्वात् दिनद्वयव्याप्त्यसम्भवेन सन्देहाभावात् यद्दिने करणं तद्दिने उपवासः। यदा तु सायंसन्ध्यामारभ्य प्रवृत्तं करणं परेद्युः सूर्य्योदयात् प्रागेव परिसमाप्यते, तदा पूर्व्वोत्तरयोर्दिनयोरेकभक्ताभ्यामुपवास-सिद्धिरिति समुदितार्थः । ३ संक्रान्तौ सामान्यतो निर्णयमाह आसन्नेति । विशेषतः तन्निर्णयमाह चरे इति । चरे चरराशौ मेष-कर्कट-तुला-मकर-रूपे । " चर-स्थिरद्वयात्मक-नामधेया मेषादयोऽमी क्रमशः प्रदिष्टाः "—इत्युक्तेः । ४ द्विःस्वभावे द्वयात्मके राशौ । ५ " उक्तौ पूर्व्व-पश्चिमौ कालौ व्यवस्थाप्यौ विरुद्धतया व्यत्ययेनानुष्ठेयत्वेनाश्रयणीयौ "—इति टीका । ६ अर्द्धरात्रात् परतः संक्रमणे पर-दिने उदयादूर्द्ध्वं प्रहरद्वयमित्यर्थः ।

प्राहुर्दिन-द्वयं पुण्यं मुक्त्वा मकर-कर्कटौ ॥
कर्कटे मकरे रात्रावप्याचारादनुष्ठितिः[1] † ।
पूर्णिमा[2]-प्रतिपत्-सन्धौ राहुः सम्पूर्ण-मण्डलम् ॥
ग्रसते चन्द्रमर्कञ्च पर्व-प्रतिपदन्तरे ।
ग्रस्यमाने भवेत् स्नानं ग्रस्ते होमो विधीयते ॥
मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयते ।
सूर्य्य-ग्रहे तु नाश्नीयात् पूर्वं याम-चतुष्टयम् ॥
चन्द्र-ग्रहे तु यामांस्त्रीन् बाल-वृद्धातुरैर्विना ।
अ[3]पराह्णे न मध्याह्ने मध्याह्ने न तु सङ्गवे ॥
भुञ्जीत, सङ्गवे चेत् स्यात् न पूर्वं भुजिमाचरेत् ।
ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत् ॥
ग्रस्तावेवास्तमानञ्च रवीन्दू प्राप्नुतो यदि ।
त[4]योः परेद्युरुदये स्नात्वाऽभ्यवहरेन्नरः ॥
त्रयोदश्यादितो वर्ज्यं दिनानां नवकं ध्रुवम् ।
मङ्गलेषु समस्तेषु ग्रहणे चन्द्र-सूर्य्ययोः ॥
द्वा[5]दश्यादि * स्तृतीयान्तो वेध इन्दु-ग्रहे स्मृतः ।
एकादश्यादिकः सौरे चतुर्थ्यन्तः प्रकीर्त्तितः ॥
खण्ड-ग्रहे तयोः प्रोक्तमुभयत्र दिन-द्वयम् ‡ ।

---

† रात्रौ यथाचारादनुष्ठितिः,—इति पाठान्तरम् । * द्वादशादि,—इति मु० पुस्तके पाठः । ‡ दिनत्रयम्—इति का० पुस्तके पाठः ।

---

१ शिष्टाचारानुसारेणानुष्ठानमित्यर्थः । तत्र, रात्रावयन-संक्रमे रात्रावेव पूर्व्वापर-भावेन स्नानादि-क्रियेति प्राच्य-शिष्टाचारः । रात्रौ कर्कटसंक्रान्तौ पूर्व्वमेव दिनं, मकर-संक्रान्तौ तु परमेव दिनं ग्राह्यमिति दाक्षिणात्य-शिष्टाचारः । तथा च शिष्टाचाराद्भयं प्रमाणमिति भावः । २ ग्रहण-निर्णयमाह पूर्णिमेति । पूर्णिमा-प्रतिपत्-सन्धौ चन्द्रं, पर्वप्रतिपत्-सन्धौ सूर्य्यं राहुर्ग्रसते इत्यर्थः । पर्व्व अमावस्या । ३ बालवृद्धातुर-विषये भोजन-व्यवस्थामाह अपराह्णे इति । पञ्चधा विभक्त-दिनस्य यस्मिन् भागे ग्रहणं, तदव्यवहित-पूर्व्वभागे भोजनमेषां नेत्यर्थः । ४ तदा,—इत्यादिः । अभ्यवहारो भोजनम् । ५ ग्रहणे वेध-निर्णयमाह द्वादश्यादिरित्यादिना ।

नित्ये नैमित्तिके जप्ये होम-यज्ञ-क्रियासु च ॥
उपाकर्मणि चोत्सर्गे ग्रह-दोषो न विद्यते ।
तमेव निर्णयं * शास्त्र-न्यायाभ्यां कर्तुमुद्यमः ॥

ननु, नायमुद्यमः सफलः कालस्य गगन-कुसुमायमानत्वात् । तदेतत्परम-रहस्यमभिजानानः कपिल-महामुनिस्तत्वानि[1] विवेक्त-कामः कालमुपेक्ष्यान्यान्येव पञ्चविंशति-तत्त्वानि विविवेच—

" मूल-प्रकृतिरविकृतिर्महदाद्याः प्रकृति-विकृतयः सप्त ।
षोडशकश्च[2] विकारो न प्रकृतिर्न विकृतिः पुरुषः "—इति ।

न चैतेष्वेव तत्त्वेषु कालस्यान्तर्भावो मुनिना विवक्षितः,—इति शङ्कनीयम् । त्वदभिमतस्य कालस्य यथोक्त-पञ्चविंशति-तत्त्वानाञ्च परस्परमत्यन्तविलक्षणत्वात् । तथा हि,—चिर-क्षिप्रादि-व्यवहार-स्यासाधारणहेतुः कालः,—इति त्वदभिमतं काल-लक्षणम्[3] । तत्त्वानां त्वन्यादृशानि लक्षणानि,—सत्त्वरजस्तमोगुणानां[4] साम्यावस्था मूलप्रकृतिः, महदहङ्कार-पञ्चतन्मात्राख्यानां सप्तानां प्रकृति-विकृतीनां मध्येऽ-ध्यवसाय-हेतुर्महत्तत्त्वम्, अभिमान-हेतुरहङ्कारः, शब्द-स्पर्श-रूप-रस-गन्धात्मकानि पञ्च तन्मात्राणि पृथिव्यादि-पञ्चमहाभूतानां

---

* ईदृशं नियमं,—इति पाठान्तरम् । सो० क० पुस्तके च एतदर्द्धात् पूर्व्वं, ईदृशं नियमं न्यायैर्व्विवरीतुमिहोद्यमः,—इत्यर्द्धमधिकं वर्त्तते ।

---

१ तत्त्वानि पदार्थान् । २ षोडश-संख्या-परिमितो गणः षोडशकः । परिमाणे कन् । यद्यपि ईश्वरकृष्णस्य कारिकैषा न त्वियं कपिलमुनेरुक्तिः, तथापि कपिल-मतस्यैवात्र संग्रहात् कपिल-मतमेवैतदित्यविरोधः । ३ तथा च वैशेषिकसूत्रम् । " अपरस्मिन्नपरं युगपच्चिरं क्षिप्रमिति काललिङ्गानि ( २ अ० २ आ० ६ सू० ) " । परापर-व्यवहारासाधारणकारणतया युगपच्चिरादि-व्यवहारासाधारण-कारणतया च कालसिद्धिरिति तस्य संक्षेपतोऽर्थः । ४ सत्त्वरजस्तमांसि द्रव्याणि । तेषु गुणत्वव्यपदेशः पुरुषोपकरणत्वात् । मूलकृतिरित्यनेन नास्या मूलान्तरमस्तीत्युक्तम् । तेनेयमविकृतिः । महत्तत्त्वमहङ्कारस्य प्रकृतिर्विकृतिश्च मूलप्रकृतेः, अहङ्कारतत्त्वं पञ्चतन्मात्राणामिन्द्रियाणाञ्च प्रकृतिर्विकृतिश्च महतः, पञ्चतन्मात्राणि पृथिव्यादीनां प्रकृतयो विकृतयश्चाहङ्कारस्य । तेन सप्तानामेषां प्रकृतिविकृतित्वम् । तत्र, अध्यवसायो निश्चयात्मिका वृत्तिः, तद्धेतुर्महत्तत्त्वम् ।

एकादशेन्द्रियाणां च षोडश-विकाराणां लक्षणानि प्रसिद्धानि, अप्रकृति-रविकृतिः पुरुषश्चिदात्मकः । न ह्येवंलक्षणकेषु तत्त्वेषु कालस्यान्तर्भावः सम्भाव्यते । नापि षड्विंशं तत्वान्तरं* मुनिरनुमन्यते । कथं तर्हि मुनि-प्रणीतानि तत्त्वानि आर्य्याभिः संगृह्णानः ईश्वरकृष्णो बहिःकरणान्तःकरणे[1] विविचन्† कालं व्यवजहार;—

" साम्प्रत-कालं वाह्यं त्रिकालमाभ्यन्तरं करणम्[2] "—इति ।

' पर-प्रसिद्ध्या परो बोधनीयः '—इति न्यायेनायं व्यवहारो न तु स्व-सिद्धान्ताभिप्रायेण—इति वदामः । अतएवैतद्वचनं व्याचक्षाणा वाचस्पतिमिश्रास्तत्त्वकौमुद्यामेवमाहुः " कालस्तु वैशेषिकाभिमत एको नातीतानागतादि-व्यवहार-भेदं प्रवर्त्तयितुमर्हति[3] । तस्मादयं यैरुपाधि-भेदैरतीतानागतादि-भेदभावं प्रतिपद्यते, सन्तु त एवोपाधयो व्यवहार-हेतवः कृतमन्तर्गडुना कालेनेति सांख्याचार्य्याः । तस्मान्न काल-रूप-तत्त्वान्तराभ्युपगमः ",—इति । अथोच्यते,—भूतकालो वर्त्तमानकालो भविष्यत्कालः,—इति एवं त्रिष्वपि भूतादिष्वनुगतः[4] काल-प्रत्यय एकमनुगतं कालतत्त्वमन्तरेणानुपपन्नः,—इति । तन्न । पदार्थ-प्रत्ययवदुपपत्तेः यथा भवन्मते द्रव्य-

* षड्विंशतत्त्वान्तरं,—इति मु० पुस्तके पाठः । † विविञ्चन्,—इति मु० पुस्तके पाठः ।

---

इदमेव बुद्धिरित्युच्यते । अभिमानात्मकवृत्तिहेतुरहङ्कारः । पृथिव्यादिषु महाभूतेषु शब्दादयो गुणा न व्यवस्थिताः, " आद्याद्यस्य गुणं तेषामवाप्नोति परः परः "—इत्युक्तेः । तन्मात्रेषु त्वेकैकेषु शब्दादय एकैके एव गुणा न तु तत्र गुणान्तरसङ्कर इति तेषां तन्मात्रसंज्ञा। तत्रत्यशब्दादिषु शान्तत्वादिविशेषविरहादपि तेषां तन्मात्रत्वं बोध्यम्। तदुक्तम्,—" तस्मिंस्तस्मिंस्तु तन्मात्रास्तेन तन्मात्रता स्मृता । न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिणः "—इति ।

१ बहिःकरणानि चक्षुरादीनि, अन्तःकरणानि महदहंकारमनांसि । २ चक्षुरादिकं वर्त्तमानमेव गृह्णातीति साम्प्रतकालं वाह्यं करणम् । अन्तःकरणन्तु अतीतमनागतं वर्त्तमानञ्च विषयीकरोतीति त्रिकालमाभ्यन्तरं करणम् । ३ कालस्यातीतानागतादिव्यवहारप्रवर्त्तकत्वाभावे तस्यैकत्वं हेतुरिति बोध्यम् । ४ अनुगतत्वञ्च कालप्रत्ययस्य भूतादिषु व्यावर्त्तमानेष्वपि कालस्यानुवर्त्तनादवसेयम् ।

पदार्थो गुणपदार्थः,—इति षट्सु भावेषु चतुर्ष्वभावेषु अपि[1] अनुगतः पदार्थप्रत्यय एकमनुगतं पदार्थ-शब्द-वाच्यं तत्त्वान्तरम्* अन्तरेणाप्युपपन्नः तथा काल-प्रत्ययः कुतो नोपपद्यते। तस्मात्, निस्तत्त्वं कालं निर्णेतुं महानयं उद्यमः प्रेक्षावच्छिरोमणेर्माधवाचार्यस्य न कथञ्चिदप्युपपन्नः—इत्येवं प्राप्ते ब्रूमः।

आयुष्मतश्चैतस्यैवं† निरूढ-कालतत्त्वे यः प्रद्वेषः, स कस्य हेतोरिति वक्तव्यम्। किं कपिल-महामुनिना निराकृतत्वात्, किं वा सांख्य-शास्त्र-प्रणीतेषु तत्त्वेष्वसंगृहीतत्वात्, उत लक्षणाभावात् आहोस्वित् प्रमाणाभावात्, अथ वा प्रयोजनाभावात्, अथ वा तत्त्वगतपञ्चविंशतिः-संख्याऽ$भ्यास-पाटवेनावसितात्श्रद्धाजाड्यात्§? न प्रथमः, काल-निराकरण-सूत्रस्य मुनिना प्रणीतस्यानुपलम्भात्। न द्वितीयः, अतिप्रसङ्गात्। ऋग्वेदादिप्रोक्तानां ज्योतिष्टोमादीनां आयुर्वेद-धनुर्वेद-गान्धर्ववेद‡प्रोक्तानामौषध-शस्त्र-स्वरादीनाञ्चासंगृहीतत्वेन तेष्वपि भवतः प्रद्वेष केन वार्य्येत %।

अथ, तेषां विशिष्यासंग्रहेऽपि सुख-दुःख-मोहात्मकत्वेन गुणत्रयान्तर्भावात् अस्त्येवार्थात् संग्रहः,—इत्युच्येत‖। तर्हि कालस्याप्यसौ न दण्ड-वारितः,—इति बुद्धिं समाधत्स्व। कालस्य गुण-त्रय-परिणामत्वे सावयवत्वमनित्यत्वं च घटादेरिव प्रसज्येत,—इति चेत्। नित्यनिरवयव-काल-तत्त्वाभिनिवेशवतो वैशेषिकादेः पतत्वयं वज्रप्रहारः शिरसि। वेद-वादिनां तु न काऽपि क्षतिः। कालस्योत्पत्ति

---

* तत्त्वान्तरं,—इति नास्ति मु० पुस्तके। † आयुष्मतश्चेत्तस्यैवं,—इति मु० पुस्तके पाठः। $ तत्वसंख्या,—इति मु० पुस्तके पाठः। § नाभ्यसितात् श्रद्धाजाड्यात्,—इति क० पुस्तके पाठः। ‡ वेद,—इति नास्ति मु० पुस्तके। % वार्य्यते,—इति मु० पुस्तके पाठः। ‖ इत्युच्यते,—इति मु० पुस्तके पाठः।

---

१ द्रव्य-गुण-कर्म्म-सामान्य-विशेष-समवायाः षड्भावाः, प्रागभाव-ध्वंसाभावात्यन्ताभावान्योन्याभावाश्चत्वारोऽभावाश्च वैशेषिकतन्त्रे प्रसिद्धाः। २ आयुष्मतः पूर्व्वपेक्षिणः। सोल्लुण्ठोक्तिरियम्। निरूढं सर्व्वलोकप्रसिद्धम्।

